रेवद्वराय रुद्राय नमस्तेऽरूपरूपिणे।
परापर परिस्पन्द मन्दिराय नमो नमः।।१५।।

भरिताखिल विश्वाय योगगम्याय ते नमः।
नमः सर्वेश्वरेशाय महाहंसाय शम्भवे।।१६।।

चर्च्याय चर्चनीयाय चर्चकाय चराय ते।
रवीन्दु सन्धि संस्थाय महाचक्रेश ते नमः।।१७।।

सर्वानुस्यूतरूपाय सर्वाच्छादक शक्तये।
सर्वभक्ष्याय शर्वाय नमस्ते सर्ववेदिने।।१८।।

रम्याय वल्लभाक्रान्त देहार्धाय विनोदिने।
नमः प्रपन्नदुष्प्राप्य सौभाग्यफलदायिने।।१९।।

तन्महेशाय तत्त्वार्थवेदिने भवभेदिने।
महाभैरवनाथाय भक्तिगम्याय ते नमः।।२०।।

शक्तिगर्भ प्रबोधाय शरण्यायाशरीरिणे।
शान्ति पुष्ट्यादि साध्यार्थ साधकाय नमोस्तुते।।२१।।

रवत्कुण्डलिनी गर्भ प्रबोध प्राप्त शक्तये।
उत्स्फोटना पटु प्रौढ परमाक्षर मूर्तये।।२२।।

समस्त व्यस्त संग्रस्त रश्मिजालोदरात्मने।
नमस्तुभ्यं महामीन रूपिणे विश्वगर्भिणे।।२३।।

रेवारणि समुद्भूत वह्निज्वालावभासिने।
घनीभूत विकल्पात्म विश्वबन्धविलापिने।।२४।।

भोगिनी स्यन्दना रूढि प्रौढिमालब्ध गर्विणे।
नमस्ते सर्वभक्ष्याय परमामृतलाभिने।।२५।।

नफ कोटि समावेश भरिताखिलसृष्टये।
नमः शक्तिशरीराय कोटि द्वितय सङ्गिने।। २६।।

महामोह मलाक्रान्त जीववर्गविबोधिने।
महेश्वराय जगतां नमः कारण बन्धवे।। २७।।

स्तेनोन्मूलन दक्षैक स्मृतये विश्वमूर्तये।
नमस्तेऽस्तु महादेवनाम्ने परस्वधात्मने।। २८।।

रुग्द्राविणे महावीर्य रुरुवंश विनाशिने।
रुद्राय द्राविताशेष बन्धनाय नमो नमः।। २९।।

द्रवत्पररसास्वाद चर्वणोद्युक्त शक्तये।
नमस्त्रिदश पूज्याय सर्वकारण हेतवे।। ३०।।

रूपातीत नमस्तुभ्यं नमस्ते बहुरूपिणे।
त्र्यम्बकाय त्रिधामान्तश्चारिणेचित्रचक्षुषे।। ३१।।

पेशलोपाय लभ्याय भक्तिभाजां महात्मनाम्।
दुर्लभाय मलाक्रान्त चेतसां तु नमो नमः।। ३२।।

भवप्रदाय दुष्टानां भवाय भवभेदिने।
भव्यानां त्वन्मयानां तु सर्वदाय नमो नमः।। ३३।।

अणूनां मुक्तये घोर घोर संसारदायिने।
घोरातिघोरमूढानां तिरस्कर्त्रे नमो नमः।। ३४।।



सर्वकारण कलाप कल्पितो-
ल्लास संकुल समाधि विष्टराम्।
हार्दकोकनद संस्थितामपि
तां प्रणौमि शिववल्लभामजाम्।।

सर्वजन्तु हृदयाब्जमण्डलो-
द्भूत भाव मधुपान लम्पटाम्।
वर्णभेद विभवान्तरस्थितां
तां प्रणौमि शिववल्लभामजाम्।।



इत्येवं स्तोत्रराजेशं महाभैरव भाषितम्।
योगिनीनां परं सारं नदद्याद्यस्य कस्यचित्।। १।।

अदीक्षिते शठे क्रूरे निःसत्ये शुचिवर्जिते।
नास्तिके च खले मूर्खे प्रमत्ते विप्लुतौजसे।। २।।

गुरुशास्त्र सदाचार दूषके कलहप्रिये।
निन्दके जम्भके क्षुद्रे समयघ्ने च दाम्भिके।। ३।।

दाक्षिण्यरहिते पापे धर्महीने च गर्विते।
भक्तियुक्ते प्रदातव्यं न देयं परदीक्षिते।। ४।।

पशूनां सन्निधौ देवि! नोच्चार्यं सर्वथा क्वचित्।
अस्यैव स्मृतिमात्रेण विघ्नाः नश्यन्त्यनेकशः।। ५।।

गुह्यकाः यातुधानश्च, वेताला राक्षसादयः।
डाकिन्यश्च पिशाचाश्च, क्रूर सत्त्वाश्च पूतनाः।। ६।।

नश्यन्ति सर्वे पठित स्तोत्रस्यास्य प्रभावतः।
खेचरी भूचरी चैव डाकिनी शाकिनी तथा।। ७।।

ये चान्ये बहुधा भूता दुष्टसत्त्वा भयानकाः।
व्याधि दुर्भिक्ष दौर्भाग्य मारी मोह विषादयः।। ८।।

गजव्याघ्रादयो दुष्टाः पलायन्ते दिशो दश।
सर्वे दुष्टाः प्रणश्यन्ति चेत्याज्ञा पारमेश्वरी।। ९।।

।। इति श्रीललितस्वच्छन्दे बहुरूपगर्भस्तोत्रं समाप्तम्।।



Note : Second Sunday of the Month

ॐ

श्रीश्रीज्ञाननेत्रपादरचितं

## कालिकास्तोत्रम्

सिततरसंविदवाप्यं सदसत्कलनाविहीनमनुपाधि
जयति जगत्त्रयरूपं नीरूपं देवि ! ते रूपम्।।

एकमनेकाकारं प्रसृतजगद्व्याप्ति विकृतिपरिहीनम्।
जयति तवाद्वयरूपं विमलमलं चित्स्वरूपाख्यम्।।

जयति तवोच्छलदन्तः स्वच्छेच्छायाः स्वविग्रहग्रहणम्।
किमपि निरुत्तरसहजस्वरूपसंवित्प्रकाशमयम्।।

वान्त्वा समस्तकालं भूत्या झंकारघोरमूर्तिमपि।
निग्रहमस्मिन्कृत्वानुग्रहमपि कुर्वती जयसि।।

कालस्य कालि ! देहं विभज्य मुनिपञ्चसंख्यया भिन्नम्।
स्वस्मिन्विराजमानं तद्रूपं कुर्वती जयसि।।

भैरवरूपी कालः सृजति जगत् कारणादिकीटान्तम्।
इच्छावशेन यस्याः सा त्वं भुवनाम्बिका जयसि।।

जयति शशाङ्कदिवाकरपावकधामत्रयान्तरव्यापि।
जननि ! तव किमपि विमलं स्वरूपरूपं परं धाम।।

एकं स्वरूपरूपं प्रसरस्थितिविलयभेदतस्त्रिविधम्।
प्रत्येकमुदयसंस्थितिलयविश्रमतश्चतुर्विधं तदपि।।
इति वसुपञ्चकसंख्यं विधाय सहजस्वरूपमात्मीयम्।
विश्वविवर्त्तावर्त्तप्रवर्तकं जयति ते रूपम्।। (युगलकम्)

सदसद्विभेदसूतेर्दलनपरा कापि सहजसंवित्तिः।
उदिता त्वमेव भगवति ! जयसि जयाद्येन रूपेण।।

जयति समस्तचराचरविचित्रविश्वप्रपञ्चरचनोर्मि।
अमलस्वभावजलधौ शान्तं कान्तं च ते रूपम्।।

सहजोल्लासविकासप्रपूरिताशेषविश्वविभवैषा।
पूर्णा तवाम्ब ! मूर्तिर्जयति परानन्दसंपूर्णा।।

कवलितसकलजगत्त्रयविकटमहाकालकवलनोद्युक्ता।
उपभुक्तभावविभवप्रभवापि कृशोदरी जयसि।।

रूपत्रयपरिवर्जितमसमं रूपत्रयान्तरव्यापि।
अनुभवरूपमरूपं जयति परं किमपि ते रूपम्।।

अव्ययमकुलममेयं विगलितसदसद्विवेककल्लोलम्।
जयति प्रकाशविभवस्फीतं काल्याः परं धाम।।

ऋतुमुनिसंख्यं रूपं विभज्य पंचप्रकारमेकैकम्।
दिव्यौघमुद्गिरन्ती जयति जगत्तारिणी जननी।।

भूदिग्गोखगदेवीचक्रलसज्ज्ञानविभवपरिपूर्णम्।
निरुपमविश्रांतिमयं श्रीपीठं जयति ते रूपम्।।

प्रलयलयान्तरभूमौ विलसितसदसत्प्रपंचपरिहीनाम्।
देवि ! निरुत्तरतरां नौमि सदा सर्वतः प्रकटाम्।।

यादृग् महाश्मशाने दृष्टं देव्याः स्वरूपमकुलस्थम्।
तादृग् जगत्-त्रयमिदं भवतु तवाम्ब ! प्रसादेन।।

इत्थं स्वरूपस्तुतिरभ्यधायि
सम्यक् समावेशदशावशेन।
मया शिवेनास्तु शिवाय सम्यङ्
ममैव विश्वस्य तु मङ्गलाय।।

(कृतिरियं श्रीश्रीज्ञाननेत्रपादानामिति शिवम्)।।



Note : Third Sunday of the Month

## ।। अथ श्रीक्रमस्तोत्रम् ।।

सृष्टिकाली
कौलार्णवानन्दघनोर्मिरूपा-
मुन्मेषमेषोभयभाजमन्तः।
नि्लीयते नीलकुलालये या
तां सृष्टिकालीं सततं नमामि।। १।।

रक्तकाली

**महाविनोदार्पितमातृचक्र-**
**वीरेन्द्रकासृग्रसपानसक्ताम्।**
**रक्तीकृतां च प्रलयात्यये तां**
**नमामि विश्वाकृतिरक्तकालीम्।। २।।**

स्थितिनाशकाली

**वाजिद्वयस्वीकृतवातचक्र-**
**प्रक्रान्तसंघट्टगमागमस्थाम्।**
**शुचिर्ययास्तंगमितोर्चिषा तां**
**शान्तां नमामि स्थितिनाशकालीम्।। ३।।**

यमकाली

**सर्वार्थसंकर्षणसंयमस्य-**
**यमस्य यन्तुर्जगतो यमाय।**
**वपुर्महाग्रासविलासरागा-**
**त्संकर्षयन्तीं प्रणमामि कालीम्।। ४।।**

संहारकाली

**उन्मन्यनन्ता निखिलार्थगर्भा**
**या भावसंहारनिमेषमेति।**
**सदोदिता सत्युदयाय शून्यां**
**संहारकालीं मुदितां नमामि।। ५।।**

मृत्युकाली

**ममेत्यहंकारकलाकलाप-**
**विस्फारहर्षोद्धतगर्वमृत्युः।**

ग्रस्तो यया घस्मरसंविदं तां
नमाम्यकालोदितमृत्युकालीम्।। ६।।

भद्रकाली

विश्वं महाकल्पविरामकल्प-
भवान्तभीमभ्रुकुटिभ्रमन्त्या।
याश्नात्यनन्तप्रभवार्चिषा तां
नमामि भद्रां शुभभद्रकालीम्।। ७।।

मार्तण्डकाली

मार्तण्डमापीतपतङ्गचक्रं
पतङ्गवत्कालकलेन्धनाय।
करोति या विश्वरसान्तकां तां
मार्तण्डकालीं सततं प्रणौमि।। ८।।

परमार्ककाली

अस्तोदितद्वादशभानुभाजि
यस्यां गता भर्गशिखा शिखेव।
प्रशान्तधाम्नि द्युतिनाशमेति
तां नौम्यनन्तां परमार्ककालीम्।। ९।।

कालाग्निरुद्रकाली

कालक्रमाक्रान्तदिनेशचक्र-
क्रोडीकृतान्ताग्निकलाप उग्रः।
कालाग्निरुद्रो लयमेति यस्यां
तां नौमि कालानलरुद्रकालीम्।। १०।।

महाकालकाली

नक्तं महाभूतलये श्मशाने
  दिग्खेचरीचक्रगणेन साकम्।
कालीं महाकालमलं ग्रसन्तीं
  वन्दे ह्यचिन्त्यामनिलानलाभाम्।।११।।

महाभैरव-घोर-चण्डकाली

क्रमत्रयत्वाष्टमरीचिचक्र-
  सञ्चारचातुर्यतुरीयसंत्ताम्।
वन्दे महाभैरव घोर चण्ड-
  कालीं कलाकाशशशाङ्ककांतिम्।।१२।।



**Note : Fourth Sunday of the Month**

ॐ नमः शिवाय।

ओमिति स्फुरदुरस्यनाहतं
  गर्भगुम्फितसमस्तवाङ्मयम्।
दन्ध्वनीति हृदि यत्परं पदं
  तत्सदक्षरमुपास्महे महः।। १।।

भानुना तुहिनभानुना बृहद्-
  भानुना च विनिवर्तितं न यत्।
येन तज्झगिति शान्तिमान्तरं
  ध्वान्तमेति तदुपास्महे महः।।२।।

तर्ककर्कशगिरामगोचरं
स्वानुभूतिसमयैकसाक्षिणम्।
मीलिताखिलविकल्पविप्लवं
पारमेश्वरमुपास्महे महः।। ३।।

पद्मसद्मकरमर्दलालितं
पद्मनाभनयनाब्जपूजितम्।
पद्मबन्धुमुकुटांशुरञ्जितं
पादपद्मयुगमैश्वरं स्तुमः।। ४।।

यदि हरोऽसि तदा हर दुष्कृतं
यदि भवोऽसि सदा भव भूतये।
यदि शिवोऽसि तदा कुरु मे शुभं
शमय दुःखमिदं यदि शङ्करः।।५।।

शरणं तरुणेन्दुशेखरः
शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ
शरणं नान्यदुपैमि दैवतम्।। ६।।

सदुपायकथास्वपण्डितो
हृदये दुःखशरेण खण्डितः।
शशिखण्डशिखण्डमण्डनं
शरणं यामि शरण्यमीश्वरम्।। ७।।

रामनामजपतां कुतो भयं
सर्वतापशमनैकभेषजम्।
पश्य तात मम गात्रसन्निधौ
पावकोऽपि सलिलायतेऽधुना।। ८।।

क्षालयामि तव पादपङ्कजं
नाथ दारुदृषदोः किमन्तरम्।
मानुषीकरणचूर्णमस्ति ते
पादयोरिति कथा प्रथीयसी॥ ९॥

आञ्जनेयमतिपाटलाननं
काञ्चनाद्रिकमनीयविग्रहम्।
पारिजाततरुमूलवासिनं
भावयामि पवमाननन्दनम्॥ १०॥

यत्र यत्र रघुनाथकीर्तनं
तत्र तत्र कृतमस्तकाञ्जलिम्।
वाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम्॥ ११॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम्॥ १२॥

मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शरणं प्रपद्ये॥ १३॥ (युगलकम्)

स्वैरेव यद्यपि गतोऽहमधः कुकृत्यै-
स्तत्रापि नाथ तव नास्म्यवलेपपात्रम्।
दृप्तः पशुः पतति यः स्वयमन्धकूपे
नोपेक्षते तमपि कारुणिको हि लोकः॥ १४॥

मानुष्यनावमधिगम्य चिरादवाप्य
निस्तारकञ्च करुणाभरणं भवन्तम्।
यस्याभवद्धरवशस्तरितुं भवाब्धिं
सोऽहं ब्रुडामि यदि कस्य विडम्बनेयम्।।१५।।

महेश्वरे वा जगतामधीश्वरे
जनार्दने वा जगदन्तरात्मनि।
न कापि भेदप्रतिपत्तिरस्ति मे
तथापि भक्तिस्तरुणेन्दुशेखरे।।१६।।

वामे भूमिसुता पुरश्च हनुमान् पश्चात् सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम्।।१७।।

श्रीरामः शरणं समस्त जगतां रामं नमामीश्वरम्।
रामेण रचितं त्रिलोकमखिलं रामाय तुभ्यं नमः।।
रामात् सर्वमिदम् जगत् समुदितं रामस्य दासोऽस्म्यहम्।
रामे मे रतिरस्तु राम ! नहिमाम् मोक्तुं भवानर्हति।।१८।।

मोहः शान्तो गुरुवरमुखाम्नाय तत्त्वोपलम्भात्
मग्नं चेतः समरससमास्वादलोलं चिदब्धौ।
भावव्रातः प्रशममगमन्निर्विकल्पे समाधौ
सिद्धाभासः स भवतु हि मे कोऽपि संविद्विकासः।।१९।।

क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये।
भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः।।२०।।

ऊनाधिकमविज्ञातं पौवपिर्यविवर्जितम्।
यच्चावधानरहितं बुद्धेर्विस्खलितं च यत्।।

तत्सर्वं मम सर्वेश भक्तस्यार्तस्य दुर्मतेः।
क्षन्तव्यं कृपया शंभो ! यतस्त्वं करुणापरः।।

अनेन स्तोत्रयोगेन तवात्मानं निवेदये।
पुनर्निष्कारणमहं दुःखानां नैमि पात्रताम्।। (तिलकम्)



Note : Second & Fourth Sunday of the Month

## ।। अथ शिवमहिम्नस्तोत्रम् ।।

व्याधीनां अगदं दिव्यं आधीनां मूलकृन्तनम्।
उपद्रवानां दलनं महादेवमुपास्महे।।३।।



ॐ महिम्नः पारं ते परमऽविदुषो यद्यऽसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः।
अथाऽवाच्यः सर्वः स्वमतिपरिणामावधि गृणन्-
ममाप्येष स्तोत्रे हर निरपवादः परिकरः।। १।।

अतीतः पन्थानं तव च महिमा वाङ्मनसयो-
रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः।।२।।

मधुस्फीता वाचः परमममृतं निर्मितवत-
स्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम्।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन्पुरमथन! बुद्धिर्व्यवसिता।। ३।।

तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्
त्रयीवस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु।
अभव्यानामस्मिन्वरद ! रमणीयामरमणीं
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः।।४।।

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च।
अतर्क्यैश्वर्ये त्वय्यऽनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः।।५।।

अजन्मानो लोकाः किमवयववन्तोऽपि जगता-
मधिष्ठातारं किं भवविधिरनादृत्य भवति।
अनीशो वा कुर्याद्भुवनजनने कः परिकरं
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे।। ६।।

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव।।७।।

महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद तन्त्रोपकरणम्।
सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां
नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति।। ८।।

ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये।
समस्तेऽप्येतस्मिन्पुरमथन ! तैर्विस्मित इव
स्तुवञ्जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता।।९।।

तवैश्वर्यं यत्नाद्यदुपरि विरिञ्चिर्हरिरधः
परिच्छेत्तुं यातौ अनलमनलस्कन्दवपुषः।
ततो भक्तिश्रद्धाभरगुरु गृणद्भ्यां गिरिश ! यत्-
स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति।।१०।।

अयत्नादासाद्य त्रिभुवनमवैरव्यतिकरं
दशास्यो यद्बाहूनभृत रणकण्डूपरवशान्।
शिरः पद्मश्रेणीरचितचरणाम्भोरुहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर ! विस्फूर्जितमिदम्।।११।।

अमुष्य त्वत्सेवासमधिगतसारं भुजवनं
बलात् कैलासेऽपि त्वदधिवसतौ विक्रमयतः।
अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः।।१२।।

यदृद्धिं सुत्राम्णो वरद ! परमोच्चैरपि सती-
मधश्चक्रे बाणः परिजनविधेयत्रिभुवनः।
न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयो-
र्न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः।।१३।।

अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा-
विधेयस्यासीद्यस्त्रिनयन ! विषं संहृतवतः।

स कल्माषः कण्ठे तव न कुरुते न श्रियमहो
विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः।।१४।।

असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत्-
स्मरः स्मर्तव्यात्मा नहि वशिषु पथ्यः परिभवः।।१५।।

मही पादाघाताद्व्रजति सहसा संशयपदं
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम्।
मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता।।१६।।

वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः
प्रवाहो वारां यः पृषतलघु दृष्टः शिरसि ते।
जगद्द्वीपाकारं जलधिवलयं तेन कृतम् इति
अनेनैवोन्नेयं धृतमहिम ! दिव्यं तव वपुः।।१७।।

रथःक्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधि-
र्विधेयैः क्रीडन्त्यो न खलु परतन्त्रा प्रभुधियः।।१८।।

हरिस्ते साहस्त्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम्।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम्।।१९।।

क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते।
अतस्त्वांसंप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं
श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः।। २०।।

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता-
मृषीणामार्त्विज्यं शरणद ! सदस्याः सुरगणाः।
क्रतुभ्रंशस्त्वत्तः क्रतुफलविधानव्यसनिनो
ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः।। २१।।

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः।। २२।।

स्वलावण्याशंसा धृतधनुषमह्नाय तृणवत्-
पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि।
यदि स्त्रैणं देवी यमनिरत देहार्धघटना-
दवैति त्वामद्धाबत वरद मुग्धा युवतयः।। २३।।

श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचरा-
श्चिताभस्मालेपः स्त्रगपि नृकरोटीपरिकरः।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तॄणां वरद परमं मङ्गलमसि।। २४।।

मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः।
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः।
यदालोक्याह्लादं ह्रद इव निमज्ज्याऽमृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान्।। २५।।

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं
न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि॥ २६॥

त्रयीं तिस्रो वृत्तिस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम्॥ २७

भवः शर्वो रुद्रः पशुपतिरथोग्रः सह महां-
स्तथा भीमेशानाविति यदभिधानाष्टकमिदम्।
अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रणिहितनमस्योस्मि भवते॥ २८॥

वपुष्प्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे ! नैवाहं क्वचिदपि भवन्तं प्रणतवान्।
नमन्मुक्तः सम्प्रत्यतनुरहमग्रेप्यनतिमान्-
महेश ! क्षन्तव्यं तदिदमपराधद्वयमपि॥ २९॥

नमो नेमिष्ठाय प्रियदव दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो
नमः सर्वस्मै ते तदिदमतिसर्वाय च नमः॥ ३०॥

बहलरजसे विश्वोत्पत्तौ भवाय नमो नमः
प्रबलतमसे तत्संहारे हराय नमो नमः।
जनसुखकृते सत्वोद्रिक्तौ मृडाय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः॥ ३१॥

श्रीपुष्पदन्त मुखपङ्कजनिर्गतेन स्तोत्रेण किल्बिषहरेण हरप्रियेण।
कण्ठस्थितेन पठितेन समाहितेन सुप्रीणितो भवति भूतपतिर्महेशः।।

इति श्रीपुष्पदन्तविरचितं शिवमहिम्नस्तोत्रम् संपूर्णम्।।



Note : 5th Sunday of the Month

# सद्गुरुलक्ष्मणदेवस्य अष्टोत्तरशतनामावली

ॐ गुरवे नमः

ॐ ईश्वरस्वरूपाय विद्महे ईश्वराश्रमाय धीमहि
तन्नोऽमृतेश्वरः प्रचोदयात्।। ३।।

अथ ध्यानम्

सहस्त्रदलपंकजे सकलशीतरश्मिप्रभं
वराभयकराम्बुजं विमलगन्धपुष्पाम्बरम्।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणम्
स्मरेत् शिरसि संततं ईश्वरस्वरूपं लक्ष्मणम्।।

तुभ्यं नमः श्रीगुरुलक्ष्मणाय।
तुभ्यं नमः श्रीगुरवे शिवाय।
गुरवे शिवाय परभैरवाय।
ईश्वरस्वरूपाय श्रीलक्ष्मणाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १

नारायणाय काक आत्मजाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २

‘अरिणी’ सुताय ‘कतिजी’ प्रियाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३

महताबकाकस्य शिष्योत्तमाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४

श्रीरामदेवस्य च वल्लभाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५

महादेवशैले कृतसंश्रयाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६

मासि वैशाखे बहुले भवाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ७

एकाधिकेशतिथि सम्भवाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८

शिष्यप्रियाय भयहारकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ९

‘लालसअब’ नाम्ना उपकारकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १०

प्रद्युम्नपीठस्य महेश्वराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ११

सर्वान्तरस्थाय भूतेश्वराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १२

अमराभिवन्द्याय् अमरेश्वराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १३

ज्वालेष्टदेव्या हि दत्ताभयाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १४

देवाधिदेवाय भवान्तकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १५

संवित्स्वरूपाय विलक्षणाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १६

हृत्पद्मसूर्याय विश्रान्तिदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १७

समस्तशैवागम पारगाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १८

प्रसन्नधामामृत मोक्षदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १९

रम्याय हृद्याय परन्तपाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २०

स्तोत्राय स्तुत्याय स्तुतिकराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २१

आद्यन्तहीनाय नरोत्तमाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २२

शुद्धाय शान्ताय सुलक्षणाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २३

आनन्दरूपाय अनुत्तराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २४

अजाय ईशाय सर्वेश्वराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २५

भीमाय रुद्राय मनोहराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २६

हंसाय शर्वाय दयामयाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २७

द्वैतेन्धनदाहक पावकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २८

मान्याय गण्याय सुभूषणाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। २९

शक्तिशरीराय परभैरवाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३०

दानप्रवीराय गतमदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३१

मतेरगम्याय परात्पराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३२

धर्मध्वजायाति शुभङ्कराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३३

स्वामिन् गौतम गोत्रोद्भवाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३४

मन्दस्मितेनाति सुखप्रदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३५

यज्ञाय यज्याय च याजकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३६

देवाय वन्द्याय भवप्रियाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३७

सर्वत्र पूज्याय विद्याधराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३८

धीराय सौम्याय तन्त्रात्मकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ३९
मन्त्रात्मरूपाय दीक्षाप्रदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४०
संगीतसाराय गीतिप्रियाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४१
प्रत्यक्षदेवाय प्रभाकराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४२
अनघाय अज्ञान विध्वंसकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४३
सिद्धिप्रदाय बन्धुरर्चिताय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४४
अक्षरात्मरूपाय प्रियव्रताय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४५
लावण्यकोषाय मदनान्तकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४६
अमितायानन्ताय भक्तप्रियाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४७
सोऽहंस्वरूपाय हंसात्मकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४८
उपाधिहीनाय निराकुलाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ४९
राजीवनेत्राय धनप्रदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५०
गोविन्दरूपाय गोपीधवाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५१
नादस्वरूपाय मुरलीधराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५२
बिसतन्तुसूक्ष्माय महीधराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५३
राकेन्दुतुल्याय सौम्याननाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५४
सर्वज्ञरूपाय च निष्क्रियाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५५
चितिस्वरूपाय तमोपहाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५६

आबालवृद्धान्त प्रियंकराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५७
जन्मोत्सवे सर्वधनप्रदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५८
षडर्धशास्त्रस्य च सारदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ५९
अध्वा अतीताय सर्वान्तगाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६०
शेषस्वरूपाय सदातनाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६१
प्रकाशपुञ्जाय सुशीतलाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६२
निरामयाय द्विजवल्लभाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६३
कालाग्निरुद्राय महाशनाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६४
अभ्यासलीनाय सदोदिताय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६५
त्रिवर्गदात्रे त्रिगुणात्मकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६६
प्रज्ञानरूपाय अनुत्तमाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६७
ईशानदेवाय मयस्कराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६८
कान्ताय त्रिस्थाय मनोमयाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ६९
हृत्पद्मतुल्याय मृगेक्षणाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ७०
सर्वार्थदात्रेऽपि दिगम्बराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ७१
तेजःस्वरूपाय गुरवे शिवाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ७२
कृतागसां दाक् अघदाहकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।।७३
बालार्कतुल्याय समुज्वलाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ७४

सिन्दूर लाक्षारुण आननाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।।७५

सर्वात्मदेवाय अनाकुलाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।।७६

मातृ प्रमेय प्रमाणमयाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।।७७

रसाधिपत्याय रहःस्थिताय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।।७८

उपमाविहीनाय उपमाधराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।।७९

स्वातन्त्र्यरूपाय स्पन्दात्मकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८०

अभिनवगुप्ताय काश्मीरिकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८१

संकोचशून्याय विभूतिदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८२

स्वानन्दलीलोत्सव संरताय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८३

मालिनीस्वरूपाय मातृकात्मकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८४

धर्मपददर्शन दीपकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८५

सायुज्यदात्रे परभैरवाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८६

पादाब्जदीप्त्याऽपहतमलाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८७

समस्तदैन्यादि विनाशकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८८

महेश्वराय जगदीश्वराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ८९

खस्थाय स्वस्थाय निरंजनाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ९०

विज्ञानज्ञानाम्बुभिः शान्तिदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।।९१

गुरवे मदीयाय मोक्षप्रदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।।९२

शिवावताराय च दैशिकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ९३
अनादिबोधाय संवित्घनाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ९४
आचार्य शङ्कर गिरेः शिवाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ९५
परभैरवधाम्नि कृतसंश्रयाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ९६
भैरवरूपाय श्रीलक्ष्मणाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ९७
खेदिग्गोभूवर्ग चक्रेश्वराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ९८
स्वच्छन्दनाथाय मम पालकाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। ९९
अमृतद्रवाय अमृतेश्वराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १००
यज्ञस्वरूपाय फलप्रदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १०१
नानदत्त आत्रेय पुत्रीसुताय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १०२
सत्याय नीलोत्पल लोचनाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १०३
भवाब्धिपोताय सुरेश्वराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १०४
शिवस्वभावं ददते नराय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १०५
विद्याशरीराय विद्यार्णवाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १०६
मूर्धन्यदेवाय सकलप्रदाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १०७
योगीन्द्रनाथाय सदाशिवाय। तुभ्यं नमः श्रीगुरुलक्ष्मणाय।। १०८

यः पठेत् प्रयतो भक्तः जपेत् वा गुरुसन्निधौ।
गुरोः नामावली नित्यं गुरुस्तस्मै प्रसीदति।।

गुरोर्माहात्म्य मालेयं सर्वताप निवारिका।
गुम्फिता गुरुदासेन पिकेन ह्यनुरोधतः।।

।। जय गुरुदेव।।



# आरती खण्ड

अदृष्ट विग्रहागतं मरीचिचक्रविस्तरम्।
अनुग्रहैककारणं नमाम्यहं गुरुक्रमम्।।

ॐ अमृतेश्वरभैरवं स्वच्छन्दनाथं
श्रीकण्ठनाथं ऋषि दुर्वाससम्।
मानस-पुत्रं त्र्यम्बकनाथं
आमर्दकनाथं श्रीनाथम्।।

मानसपुत्रीं अर्धत्र्यम्बकाख्यां त्र्यम्बकादित्यम्।
सङ्गमादित्यं वर्षादित्यमरुणादित्यम्।।

आनन्दं सोमानन्दं उत्पलदेवं आचार्यवरं श्रीशम्भुनाथम्।
लक्ष्मण-गुप्तमभिनवगुप्तं क्षेमराजं योगराजं च।।

श्रीगुरु-मनकाकं शैवाचार्यं रामं तत् शिष्यं श्रीमहताबकाकम्।
गुरुसन्तति-रूपे अवतारितं शैव-शम्भुं ईश्वरस्वरूपं च।।

भैरवं रुद्रं शिवतन्त्रं आलयं करुणालयम्।
नमामि भगवत् पादं शंकरं लोकशंकरम्।।

शंकरं शङ्कराचार्यं महान्तमभिनवगुप्तम्।
शैव-शङ्कर-अवतारितं ईश्वरस्वरूपं पुनः पुनः नमामि।।३।।

सद्गुरु महाराज की जय जय जय
सद्गुरु महाराज की जय जय जय
सद्गुरु महाराज की जय जय जय

श्री अमृतेश्वरभैरव नाथ की जय जय जय
श्री अमृतेश्वरभैरव नाथ की जय जय जय
श्री अमृतेश्वरभैरव नाथ की जय जय जय

परभैरव नाथ की जय जय जय
परभैरव नाथ की जय जय जय
परभैरव नाथ की जय जय जय

कल्कीजी महाराज की जय जय जय
कल्कीजी महाराज की जय जय जय
कल्कीजी महाराज की जय जय जय

।। जय गुरुदेव।।

## श्रीभैरवस्तुतिः

व्याप्तचराचरभावविशेषं
चिन्मयमेकमनन्तमनादिम्।
भैरवनाथमनाथशरण्यं
तन्मयचित्ततया हृदि वंदे।।१।।

त्वन्मयमेतदशेषमिदानीं
भाति मम त्वदनुग्रहशक्त्या।
त्वं च महेश ! सदैव ममात्मा
स्वात्ममयं मम तेन समस्तम्।।२।।

स्वात्मनि विश्वगते त्वयि नाथे
तेन न संसृतिभीतिः कथाऽस्ति।
सत्स्वपि दुर्धरदुःखविमोह-
त्रासविधायिषु कर्मगणेषु।। ३।।

अन्तक ! मां प्रति मा दृशमेनां
क्रोधकरालतमां विदधीहि।
शङ्करसेवनचिन्तनधीरो
भीषणभैरवशक्तिमयोऽस्मि।।४।।

इत्थमुपोढभवन्मयसंविद्-
दीधितिदारितभूरितमिस्रः।
मृत्युर्यमान्तककर्मपिशाचै-
र्नाथ ! नमोऽस्तु न जातु बिभेमि।।५।।

प्रोदितसत्यविबोधमरीचि-
प्रोक्षितविश्वपदार्थसतत्त्वः।
भावपरामृतनिर्भरपूर्णे
त्वय्यऽहमात्मनि निर्वृत्तिमेमि।।६।।

मानसगोचरमेति यदैव
क्लेशदशाऽतनुतापविधात्री।
नाथ ! तदैव मम त्वदभेद-
स्तोत्रपराऽमृतवृष्टिरुदेति।।७।।

शङ्कर ! सत्यमिदं व्रतदान-
स्नानतपो भवतापविनाशि।
तावकशास्त्रपराऽमृतचिन्ता
स्यन्दति चेतसि निर्वृतिधाराः।। ८।।

नृत्यति गायति हृष्यति गाढं
संविदियं मम भैरवनाथ !
त्वां प्रियमाप्य सुदर्शनमेकं
दुर्लभमन्यजनैः समयज्ञम्।। ९।।

वसुरसपौषे कृष्णदशम्या-
मभिनवगुप्तः स्तवमिदमकरोत्।
येन विभुर्भवमरुसन्तापं
शमयति झटिति जनस्य दयालुः।।१०।।

।। इति श्री अभिनवगुप्ताचार्यकृता शिवचामरस्तुतिः।।



हरिरेव जगज्जगदेव हरिः
हरितो जगतो नहि भिन्नमणुः।
इति यस्यमतिः परमार्थगतिः
स नरो भवसागरमुत्तरति।।

आदावन्ते चिद्रस रूपं
मध्येचिद्रस बुद्बुद्रूपम्।
भातं भातं भारूपं स्यात्
नो भातं चेन्नितरां न स्यात्।।

।। इति शिवम्।।

# श्रीगुरुदेव आरती

जय गुरुदेव हरे जय जय गुरुदेव हरे।
मम सद्गुरु श्रीलक्ष्मण क्षण में कष्ट हरे।। जय०।। १।।

सब लक्षण सुन्दर तू सर्वसंकट हारी।
अन्तस्तमहर्ता तू भव अर्णव तारी।। जय०।। २।।

सौम्यमूर्ति तू साजे अवहितजन ध्यावे।
भुक्ति-मुक्ति के दाता मांगत कर जोरे।। जय०।। ३।।

जिस दिन तुझको पाया निखर उठी काया।
भव-बन्धन सब बिखरे हरली मम माया।। जय०।।४।।

हे मम सद्गुरु ! हर लो दुष्कृत जन्मों के।
मेरे पालनकर्ता द्वार पड़ा तेरे।। जय०।।५।।

मल मेरे सब काटो हृदयकमल विकसे।
अन्तस्त्रय मेरा नित तुझ में लीन रहे।। जय०।।६।।

श्रीगुरुपद से जन्मे धूल से भाल सजे।
विधि के कलुषित अक्षर विनशे हिम जैसे।। जय०।।७।।

तनमन सौंपूं तुझको हे सद्गुरु प्यारे।
नाम स्मरण जप में नित, रहूं मगन तेरे।। जय०।।८।।

मैं बुद्धिहीन हूं चंचल तन मेरा निर्बल
एक बार अपनाओ जन्म सफल होवे।। जय०।।९।।

श्रीलक्ष्मण गुरुदेव की आरती जो गावे।
वह शिवभक्त निःसंशय शिवसम हो जावे।। जय०।।१०।।

जय गुरुदेव हरे जय जय गुरुदेव हरे।
मम सद्गुरु श्रीलक्ष्मण क्षण में कष्ट हरे।। जय०।। ११।।

कर्पूरगौरं करुणावतारं संसार सारं भुजगेन्द्रहारम्।
सदा वसन्तं हृदयारविन्दे भवं भवानी सहितं नमामि।।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखमाक् भवेत्।।

आपदां अपहर्तारं दातारं सर्व सम्पदम्।
गुणाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्।।

राजस्वस्ति प्रजास्वस्ति देशस्वस्ति तथैवच।
यजमान गृहे स्वस्ति स्वस्ति गोब्राह्मणेषु च।।



## शान्ति पाठ

असतो मां सद्गमय तमसो मां ज्योतिर्गमय।
मृत्योर्मां अमृतं गमय शान्तिः शान्तिः शान्तिः।।

शन्नो मित्रः शं वरुणः शं नो भवन्तु अर्यमा
शन्नो इन्द्रो बृहस्पतिः शं नो विष्णुः उरुक्रमः

नमो ब्रह्मणे नमस्ते वायो! त्वमेव प्रत्यक्षं ब्रह्मासि
त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि, ऋतं वदिष्यामि,
सत्यं वदिष्यामि
तन्मामवतु तद्वक्तारं अवतु
अवतु माम् अवतुवक्तारं

शांतिः शांतिः शांतिः।।

शन्नो मित्रः शं वरुणः शं नो भवन्तु अर्यमा
शन्नो इन्द्रो बृहस्पतिः शं नो विष्णुः उरुक्रमः

नमो ब्रह्मणे नमस्ते वायो! त्वमेव प्रत्यक्षं ब्रह्मासि।
त्वमेव प्रत्यक्षं ब्रह्म अवादिषम्, ऋतं अवादिषम्,
सत्यं अवादिषम्।
तन्मामवेत् तद्वक्तारं आवेत्
आवेत् माम् आवेत् वक्तारं
शांतिः शांतिः शांतिः।।
सह नौ अवतु सह नौ भुनक्तु
सह वीर्यं करवावहै, तेजस्विनावधीतं अस्तु मा
विद्विषावहै।
शान्तिः शान्तिः शान्तिः।।



श्री गुरवे रत्नदीपं धूपं कर्पूरं समर्पयामि नमः।
श्री गुरवे नैवेद्यं निवेदयामि नमः।।

तव च काचन न स्तुतिरम्बिके!
सकलशब्दमयी किल ते तनुः।
निखिलमूर्तिषु मे भवदन्वयो
मनसिजासु बहिष्प्रसरासु च।।

इति विचिन्त्य शिवे! शमिताशिवे!
जगति जातमयत्नवशादिदम्।
स्तुतिजपार्चनचिन्तनवर्जिता
न खलु काचन कालकलापि मे।।



## श्री गुरवे शिवाय नमः

अस्त्यस्मिन्महसां महानिधिरसौ देवो विवस्वान् महान्
यस्मिञ्जाग्रति जाग्रतीव रजनीसुप्ता इमे जन्मिनः।
किन्त्वेका महती ततो विजयते श्रीदैशिकाङ्घ्रिद्युति-
र्यद्भासाच्छुरितं चिरन्तनतमो हित्वैव जागर्ति सत्।।

ऊर्जस्य शुक्ले च तिथौ चतुर्थ्यां जगज्जिगीषून् स्वत ऊर्जयन्तः।
आविर्बभूवुर्महताबकाकाः काश्मीरकण्डाभिधजन्मभूमौ।।

येऽस्माननेकानभिधाय दिव्यं ज्ञानञ्च जग्मुर्निजधाममध्ये।
तपस्यशुक्लस्यतिथौद्वितीयेसूर्याब्जयोः सन्धिमयेप्यनेहसि।।

अद्यापि येऽस्मानभिबोधयन्ति प्रयाणरूपेण निजेन कर्मणा।
प्रकाशरूपप्रथितैकधाम्नि रवीन्दुमध्ये जहतः शरीरम्।।

यज्जन्मना शर्मणगोष्यवात्स्यगोत्रं तथागोत्रमवापि लोके।
अभ्युन्नतिं लोकहितैकहेतुं सर्वासु दिक्षु प्रसरत्प्रभावाम्।।

तानद्य सर्वेवयमाविशन्तो गुरून्स्मरन्तो मनसाथ वाचा।
विशुद्धभक्त्या प्रणता नमामः स्थिताञ्च ज्ञानप्रभयागतानपि।।

तज्ज्ञानगोत्रे गुरवश्चकासति ज्ञानप्रभाभिः प्रसृताभिरद्य।
श्रीलक्ष्मणाख्यानमतांजनानां दृष्ट्यैव दृष्टेस्तमसांविघातकाः।।

गुरुशिष्यस्वरूपेण दृश्यते यद्यपि द्विधा।
तथापि श्रीगुरुः साक्षादेक एव विराजते।।



## परमगुरोः श्री महताबकाकस्य स्तुतिः

स्वात्मनिष्ठं गुरुश्रेष्ठं भवसागरतारकम्।
श्रीरामस्य प्रियशिष्यं महताबकाकमहं भजे।।१।।

बुद्धिवृद्धं वयोवृद्धं त्रिकसारस्यवेदकम्।
प्रहसन्तं गुरुं वन्दे सर्वानुग्रहकारकम्।।२।।

तेजोमयं सदा शान्तं त्रिकसागरपारगम्।
दयावन्तं च तत्त्वज्ञं संसारभयनाशकम्।।३।।

पञ्चकृत्यकरं वन्दे शक्तिचक्रेश्वरं विभुम्।
विश्वंस्वात्मनि पश्यन्तमात्मानं सर्वगं तथा।।४।।

महात्मानं महताबकाकं शरणागतवत्सलम्।
नमामि बुद्धिमन्तं तं सर्वशास्त्र विशारदम्।।५।।

यस्य स्मरण मात्रेण दुस्तरो भेदसागरः।
निलीयते क्षणेनैव मुक्तिदं तं गुरुं श्रये।।६।।

परमगुरवे शर्मणगोष्यवात्स्य गोत्रोद्भवाय।
श्री महताबकाकाय नमो नमः।।७।।

